# परशुरामं प्रति शिवेनोपदिष्टं श्रीकृष्णस्तोत्रम् शुद्ध

महादेव उवाच

परं ब्रह्म परं धाम परं ज्योतिः सनातनम् ।
निर्लिप्तं परमत्मानं नमामि सर्वकारणम् ॥१॥
स्थूलात् स्थूलतमं देवं सूक्ष्मात् सूक्ष्मतमं परम् ।
सर्वदृश्यमदृश्यं च स्वेच्छाचारं नमाम्यहम् ॥२॥
साकारं च निराकारं सगुणं निर्गुणं प्रभूम् ।
सर्वाधारं च सर्वं च स्वेच्छारूपं नमाम्यहम् ॥३॥
अतीवकमनीयं च रूपं निरुपमं विभुम् ।
करालरूपमत्यन्तं बिभ्रतं प्रणमाम्यहम् ॥४॥
कर्मणः कर्मरूपं तं साक्षिणं सर्व कर्मणः ।
फलं च फल दातारं सर्वरूपं नमाम्यहम् ॥५॥
स्रष्टापाता च संहर्ता कलया मूर्ति भेदतः ।
नानामूर्तिः कलांशेन यः पुमांस्तं नमाम्यहम् ॥६॥
स्वयं प्रकृतिरूपश्च मायया च स्वयं पुमान् ।
तयोः परं स्वयं शस्वत् तं नमामि परात्परम् ॥७॥
स्त्रीपुन्नपुंसकं रूपं यो विभर्ति स्वमायया ।
स्वयं माया स्वयं मायी यो देवस्तं नमाम्यहम् ॥८॥
तारणं सर्वदुःखानं सर्वकारणकारणं ।
धारणं सर्वविश्वानां सर्वविजं नमाम्यहम् ॥९॥
तेजस्विनां रविर्यो हि सर्वजातिषु ब्राह्मणः ।



नक्षत्राणां च यस्चन्द्रस्तं नमामि जगत्प्रभुम् ॥१०
रुद्राणां वैष्णवा नांच ज्ञानिनां यो हि शंकर ।
नागानां यो हि शेषश्च तं नमामि जगद्पतिम् ॥११॥
प्रजापतिनां यो ब्रह्मा सिद्धानां कपिलः स्वयम् ।
सनत्कुमारो मुनिषु तं नमामि जगत्गुरुम् ॥१२॥
देवानां यो हि विष्णुश्च देविनां प्रकृतिः श्वयम् ।
स्वायम्भुवो मनूनां यो मानवेषु च वैष्णवः ॥१३॥
छन्दशांगायत्रीमाता देविनां वैष्णवि यथा ।
नारीणां शतरुपा च बहुरूपं नमाम्यहम् ॥१४॥
ऋतूनां यो वसन्तश्च मासानां मार्ग शीर्षकः ।
एकादशी तिथीनां च नमामि सर्व रूपिणम् ॥१५॥
सागरः सरितां यश्च पर्वतानां हिमालयः ।
वसुन्धरा सहिष्णुनां तं सर्वं प्रणमा म्यहम् ॥१६
पत्राणां तुलसी पत्रं दारुरूपेषु चन्दनम् ।
वृक्षाणां कल्पवृक्षो यस्तं नमामि जगत्पतिम् ॥१७॥
पुष्पाणां पारिजातश्च शस्यानां धान्यमेव च ।
अमृतं भक्षवस्तुनां नानारूपं नमाम्यहम् ॥१८॥
ऐरावतो गजेन्द्राणां वैनतेयश्च पक्षिणाम् ।
कामधेनुश्च धेनुनां सर्वरुपं नमाम्यहम् ॥१९॥
तैजसानां सुवर्णं च धान्यानां यव एव च ।
यः केसरी पशूनां च वररूपं नमाम्यहम् ॥२०॥

यक्षाणां च कुवेरो यो ग्रहाणां च बृहस्पति ।
दिक्पालानां महेन्द्रश्च तं नमामि परं वरम् ॥२१॥
वेदसङ्घश्च शास्त्राणां पण्डितानां सरस्वती ।
अक्षराणांकारो यस्तं प्रधानं नमाम्यहम् ॥२२॥
मन्त्राणां विष्णुमन्त्रश्च तीर्थानां जान्हवी स्वयम् ।
इन्द्रियाणां मनो यो हि सर्वश्रेष्ठं नमाम्यहम् ॥२३॥
सुदर्शनं च शस्त्राणां व्याधीनां वैष्णवो ज्वरः ।
तेजसां ब्रह्मतेजश्च वरेण्यं तं नमाम्यहम् ॥२४॥
बलं यो वै बलवतां मनोवै शीघ्र गामिनाम् ।
कालः कलयतां यो हि तं नमामि विलक्षणम् ॥२५॥
ज्ञानदाता गुरूणां च मातृरूपश्च वन्धुषु ।
मित्रेषु जन्मदाता यस्तं सारं प्रणमाम्यहम् ॥२६॥
शिल्पिनां विश्वकर्मा यः कामदेवश्च रूपिणाम् ।
पतिब्रता च पत्निनां नमस्यं तं नमाम्यहम् ॥२७॥
प्रियेषु पुत्ररूपो यो नृपरूपो नरेषु च ।
शालग्रामश्च यन्त्राणां तं विशिष्टं नमाम्यहम् ॥२८॥
धर्म कल्याणविजानां वेदानां सावेदकः ।
धर्माणां सत्यरूपो यो विशिष्टं तं नमाम्यहम् ॥२९॥
जले शैत्यस्वरूपो यो गन्धरूपश्च भूमिषु ।
शब्दरूपश्च गगने तं प्रणम्यं नमाम्यहम् ॥३०॥
क्रतुनां राजसूयो यो गायत्री छन्दसां च यः ।



गन्धर्वाणं चित्ररथस्तं गरिष्ठं नमाम्यहम् ॥३१॥
क्षीरस्वरूपो गव्यानां पवित्राणां च पावकः ।
पुण्यदानं च य स्तोत्रं तं नमामि शुभप्रदम् ॥३२॥
तृणानां कुशरूपो यो व्याधिरूपश्च वैरिणाम् ।
गुणानां शान्तरूपो यश्चित्ररूपं नमाम्यहम् ॥३३॥
तेजोरूपो ज्ञानरूपः सर्वरूपश्च योमहान् ।
सर्वानिर्वचनीयं च तं नमामि स्वयं विभुम् ॥३४॥
सर्वाधारेषु यो वायुर्यथात्मा नित्यरूपिणाम् ।
आकाशो व्यापकानां यो व्यापकं तं नमाम्यहम् ॥३५॥
वेदानिर्वचनीयं यन्न स्तोतुं पण्डितः क्षमः ।
यदनिर्वचनीयं च को वा तत् स्तोतुमीश्वरः ॥३६॥
वेदा न शक्ता यं स्तोस्तुं जडीभूता सरस्वती ।
तं च वाङ्मनसापारं कोविद्वान् स्तोतुमीश्वर ॥३७॥
शुद्धतेजःस्वरुपं च भक्तानुग्रहविग्रहम् ।
अतीवकमनीयं च श्यामरूपं नमाम्यहम् ॥३८॥
द्विभुजं मुरलीवक्त्रं किशोरं सस्मितं मुदा ।
शश्वद्गोपाङ्गनाभिश्च वीक्ष्यमाणं नमाम्यहम् ॥३९॥
राधया दत्तताम्बूलं भूक्तवन्तं मनोहरम् ।
रत्नसिंहासनस्थं च तमीशं प्रणमाम्यहम् ॥४०॥
रत्नभूषणभूषाढ्यं सेवितं श्वेतचामरैः ।
पार्षदप्रवरैर्गोपकुमारैस्तं नमाम्यहम् ॥४१॥

वृन्दावनान्तरे रम्ये रासोल्लाससमुत्सुकम् ।
रासमण्डलमध्यस्थं नमामि रसिकेश्वरम् ॥४२॥
शतश्रृङ्गे महाशैले गोलोके रत्नपर्वते ।
विरजापुलिने रम्ये प्रणमामि विहारिणम् ॥४३॥
परिपूर्णतमं शान्तं राधाकान्तं मनोहरम् ।
सत्यं ब्रह्मस्वरुपं च नित्यं कृष्णं नमाम्यहम् ॥४४॥
श्रीकृष्णस्य स्तोत्रमिदं त्रिसंध्यं यः पठेन्नरः ।
धर्मार्थकाममोक्षाणां स दाता भारते भवेद् ॥४५॥
हरिदास्यं हरौ भक्तिं लभेत् स्तोत्रप्रसादतः ।
इहलोके जगत्पूज्यो विष्णुतुल्यो भवेद् ध्रुवम् ॥४६॥
सर्वसिद्धेश्वरः शान्तोऽप्यन्त्ये याति हरेः पदम् ।
तेजसा यशसा भाति यथा सूर्यो महीतले ॥४७॥
जीवन्मुक्तः कृष्णभक्तः स भवेनात्र संशयः ।
अरोगी गुणवान् विद्वान् पुत्रवान् धनवान् सदा ॥४८॥
षडभिज्ञो दशबलो मनोयायी भवेत् ध्रुवम् ।
सर्वज्ञ सर्वदश्चैव स दाता सर्वसंपदाम् ॥४९॥
कल्पवृक्षसमः शश्वद् भवेत् कृष्ण प्रसादतः ॥
प्रणतल्केशनाशाय कृष्णकृष्ण नमोनमः ॥५०॥